॥ श्रीकृष्णस्य द्वाविंशत्यक्षरात्मको मन्त्रः ॥

श्री गणेशाय नमः ।
शौनक उवाच ।
कं मन्त्रं बालकः प्राप कुमारेण च धीमता ।
दत्तं परं श्रीहरेश्च तद्भवान् वक्तुमर्हति ॥ १॥

सौतिरुवाच ।
कृष्णेन दत्तो गोलोके कृपया ब्रह्मणे पुरा ।
द्वाविंशत्यक्षरो मन्त्रो वेदेषु च सुदुर्लभः ॥ २॥

तं च ब्रह्मा ददौ भक्त्या कुमाराय च धीमते ।
कुमारेण स दत्तश्च मन्त्रश्च शिशवे द्विज ॥ ३॥

ॐ श्रीं नमो भगवते रासमण्डलेश्वराय ।
श्रीकृष्णाय स्वाहेति च मन्त्रोऽयं कल्पपादयः ॥ ४॥

महापुरुषस्तोत्रं च पूर्वोक्तं कवचं च यत् ।
अस्यौपयोगिकं ध्यानं सामवेदोक्तमेव च ॥ ५॥

तेजोमण्डलरूपे च सूर्यकोटिसमप्रभे ।
योगिभिर्वाञ्छितं ध्याने योगैः सिद्धगणैः सुरैः ॥ ६॥

ध्यायन्ते वैष्णवा रूपं तदभ्यन्तरसन्निधौ ।
अतीवकमनीयानिर्वचनीयं मनोहरम् ॥ ७॥

नवीनजलदश्यामं शरत्पङ्कजलोचनम् ।
शरत्पार्वणचन्द्रास्यं पक्वविम्बाधिकाधरम् ॥ ८॥

मुक्तापङ्क्तिविनिन्धेकदन्तपङ्क्तिमनोहरम् ।
सस्मितं मुरलीन्यस्तहस्तावलम्बनेन च ॥ ९॥

कोटिकन्दर्पलावण्यलीलाधाम मनोहरम् ।
चन्द्रलक्षप्रभाजुष्टं पुष्ट श्रीयुक्तविग्रहम् ॥ १०॥

त्रिभङ्गभङ्गिमायुक्तं द्विभुजं पीतवाससम् ।
रत्नकेयूरवलयरत्न नूपुरभूषितम् ॥ ११॥

रत्नकुण्डलयुग्मेन गण्डस्थलविराजितम् ।
मयूरपिच्छचूडं च रत्नमालाविभूषितम् ॥ १२॥

शोभितं जानुपर्यन्तं मालतीवनमालया ।
चन्दनोक्षितसर्वाङ्गं भक्तानुग्रहकारकम् ॥ १३॥

मणिनाकौस्तुभेन्द्रेणवक्षः स्थलसमुज्ज्वलम् ।
वीक्षितं गोपिकाभिश्च शश्वद्वङ्किमलोचनैः ॥ १४॥

स्थिरयौवनयुक्तभिर्वेष्टिताभिश्च सन्ततम् ।
भूषणैर्भूषिताभिश्च राधावक्षः स्थलस्थितम् ॥ १५॥

ब्रह्मविष्णुशिवाद्यैश्च पूजितं वन्दितं स्तुतम् ।
किशोरं राधिकाकान्तं शान्तरूपं परात्परम् ॥ १६॥

निर्लिप्तं साक्षिरूपं च निर्गुणं प्रकृतेः परम् ।
ध्यायेत् सर्वेश्वरं तं च परमात्मानमीश्वरम् ॥ १७॥

इदं ते कथितं ध्यानं स्तोत्रं च कवचं मुने ।
मन्त्रौपयोगिकं सत्यं मन्त्रश्च कल्पपादपः ॥ १८॥

॥ श्रीकृष्णस्य द्वाविंशत्यक्षरो मन्त्रो ध्यानं च सम्पूर्णम् ॥